# ॥ शनिभार्या एवम् शनिस्तोत्रम् ॥

यः पुरा राज्यभ्रष्टाय नलाय प्रददो किल ।
स्वप्ने शौरिः स्वयं मन्त्रं सर्वकामफलप्रदम् ॥ १॥

क्रोडं नीलाञ्जनप्रख्यं नीलजीमूतसन्निभम् ।
छायामार्तण्डसम्भूतं नमस्यामि शनैश्चरम् ॥ २॥

ॐ नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णाञ्जननीलकाय ।
स्मृत्वा रहस्यं भुवि मानुषत्वे फलप्रदो मे भव सूर्यपुत्र ॥ ३॥

नमोऽस्तु प्रेतराजाय कृष्णवर्णाय ते नमः ।
शनैश्चराय क्रूराय सिद्धिबुद्धिप्रदायिने ॥ ४॥

य एभिर्नामभिः स्तौति तस्य तुष्टो भवाम्यहम् ।
मामकानां भयं तस्य स्वप्नेष्वपि न जायते ॥ ५॥

गार्गेय कौशिकस्यापि पिप्पलादो महामुनिः ।
शनैश्चरकृता पीडा न भवति कदाचन ॥ ६॥

क्रोडस्तु पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः ।
शौरिः शनैश्चरो मन्दः पिप्पलादेन संयुतः ॥ ७॥

एतानि शनिनामानि प्रातरुत्थाय यः पठेत् ।
तस्य शौरेः कृता पीडा न भवति कदाचन ॥ ८॥

ध्वजनी धामनी चैव कङ्काली कलहप्रिया ।
कलही कण्टकी चापि अजा महिषी तुरङ्गमा ॥ ९॥

नामानि शनिभार्याया नित्यं जपति यः पुमान् ।
तस्य दुःखा विनश्यन्ति सुखसौभाग्यं वर्धते ॥ १०॥

इति ।